एकादशः पाठः

# iq"iksRlo%

**सप्तमी-विभक्तिः**

उत्सवप्रियः भारतदेशः। अत्र कुत्रचित् शस्योत्सवः भवति, कुत्रचित् पशूत्सवः भवति, कुत्रचित् धार्मिकोत्सवः भवति कुत्रचित् च यानोत्सवः। एतेषु एव अस्ति अन्यतमः पुष्पोत्सवः इति। अयं 'फूलवालों की सैर' इति नाम्ना प्रसिद्धः अस्ति।

देहल्याः मेहरौलीक्षेत्रे ऑक्टोबर्मासे अस्य आयोजनं भवति। अस्मिन् अवसरे तत्र बहुविधानि पुष्पाणि दृश्यन्ते। परं प्रमुखम् आकर्षणं तु अस्ति पुष्पनिर्मितानि व्यजनानि। जनाः एतानि पुष्पव्यजनानि योगमायामन्दिरे बख्तियारकाकी इत्यस्य समाधिस्थले च अर्पयन्ति। केचन पाटलपुष्पैः निर्मितानि, केचन कर्णिकारपुष्पैः, अन्ये जपाकुसुमैः, अपरे मल्लिकापुष्पैः, इतरे च गेन्दापुष्पैः निर्मितानि व्यजनानि नयन्ति।



अयम् उत्सवः दिवसत्रयं यावत् प्रचलति। एतेषु दिवसेषु पतङ्गानाम् उड्डयनम्, विविधाः क्रीडाः मल्लयुद्धं चापि प्रचलति।



विगतेभ्यः द्विशतवर्षेभ्यः पुष्पोत्सवः जनान् आनन्दयति। मध्ये इयं परम्परा स्थगिता आसीत्। परं स्वतन्त्रताप्राप्तेः पश्चात् इयं मनोहारिणी परम्परा पुनः समारब्धा। पुष्पोत्सवः अद्यापि सोल्लासं सोत्साहं च प्रचलति।



## शब्दार्थाः

| | | | |
|---|---|---|---|
| **उत्सवप्रियः** | – | उत्सवों का प्रेमी | lover of festivals |
| **कुत्रचित्** | – | कहीं पर | somewhere |
| **शस्योत्सवः** | – | फसलों का उत्सव | festival of crops |
| **पशूत्सवः** (पशु+उत्सवः) | – | पशुओं का उत्सव | festival of animals |
| **यानोत्सवः** | – | गाड़ियों का उत्सव | festival of vehicles |
| **अन्यतमः** | – | कई में से एक | one of many |
| **पुष्पोत्सवः** | – | फूलों का उत्सव | festival of flowers |
| **इति नाम्ना** | – | इस नाम से | by this name |
| **अवसरे** | – | अवसर पर | on this occasion |
| **पुष्पनिर्मितानि** | – | फूलों से बने हुए | made of flowers |
| **व्यजनानि** | – | पंखे | fans |
| **पुष्पव्यजनानि** | – | फूलों के पंखे | fans of flowers |
| **समाधिस्थले** | – | दरगाह | on the burial place |
| **अर्पयन्ति** | – | अर्पित करते हैं | offer |
| **पाटलपुष्पैः** | – | गुलाब के फूलों से | with rose flowers |





| | | | |
|---|---|---|---|
| **कर्णिकारपुष्पैः** | – | कनेर के फूलों से | with oleander flowers |
| **जपापुष्पैः** | – | जवाकुसुम के फूलों से/ गुड़हल के फूलों से | with chinese rose |
| **मल्लिकापुष्पैः** | – | चमेली के फूलों से | with jasmine flowers |
| **नयन्ति** | – | ले जाते हैं | take, bring |
| **यावत्** | – | तक | upto |
| **प्रचलति** | – | चलता है | continue |
| **पतङ्गानाम्** | – | पतंगों का | of kites |
| **उड्डयनम्** | – | उड़ाना | flying |
| **मल्लयुद्धम्** | – | कुश्ती | wrestling |



## अभ्यासः

1. वचनानुसारं रिक्तस्थानानि पूरयत–

| | एकवचनम् | द्विवचनम् | बहुवचनम् |
|---|---|---|---|
| यथा– | मन्दिरे | मन्दिरयोः | मन्दिरेषु |
| | असवरे | ............... | ............... |
| | ............... | स्थलयोः | ............... |
| | ............... | ............... | दिवसेषु |
| | क्षेत्रे | ............... | ............... |
| | ............... | व्यजनयोः | ............... |
| | ............... | ............... | पुष्पेषु |







## 2. कोष्ठकेषु प्रदत्तशब्देषु समुचितपदं चित्वा रिक्तस्थानानि पूरयत–

(क) ............... बहवः उत्सवाः भवन्ति। (भारतम्/भारते)

(ख) ............... मीनाः वसन्ति। (सरोवरे/सरोवरात्)

(ग) जनाः ............... पुष्पाणि अर्पयन्ति। (मन्दिरेण/मन्दिरे)

(घ) खगाः ............... निवसन्ति। (नीडानि/नीडेषु)

(ङ) छात्राः ............... प्रयोगं कुर्वन्ति। (प्रयोगशालायाम्/प्रयोगशालायाः)

(च) ............... पुष्पाणि विकसन्ति। (उद्यानस्य/उद्याने)

## 3. अधोलिखितानि पदानि आधृत्य सार्थकानि वाक्यानि रचयत–

| | | |
|---|---|---|
| वानराः | वनेषु | तरन्ति |
| सिंहाः | वृक्षेषु | नृत्यन्ति |
| मयूराः | जले | उत्पतन्ति |
| मत्स्याः | आकाशे | गर्जन्ति |
| खगाः | उद्याने | कूर्दन्ति |

## 4. प्रश्नानाम् उत्तराणि लिखत–

(क) जनाः पुष्पव्यजनानि कुत्र अर्पयन्ति?

(ख) पुष्पोत्सवस्य आयोजनं कदा भवति?

(ग) अस्माकं भारतदेशः कीदृशः अस्ति?





(घ) पुष्पोत्सवः केन नाम्ना प्रसिद्धः अस्ति?

(ङ) मेहरौलीक्षेत्रे कस्याः मन्दिरं कस्य समाधिस्थलञ्च अस्ति?

**5. कोष्ठकेषु दत्तेषु शब्देषु उचितां विभक्तिं प्रयुज्य वाक्यानि पूरयत-**

यथा - **सरोवरे** मीनाः सन्ति। (सरोवर)

(क) ............ कच्छपाः भ्रमन्ति। (तडाग)

(ख) ............ सैनिकाः सन्ति। (शिविर)

(ग) यानानि ............ चलन्ति।(राजमार्ग)

(घ) ............ रत्नानि सन्ति। (धरा)

(ङ) बालाः ............ क्रीडन्ति। (क्रीडाक्षेत्र)

**6. मञ्जूषातः पदानि चित्वा रिक्तस्थानानि पूरयत-**

| | | | | |
|---|---|---|---|---|
| पुष्पेषु | गङ्गायाम् | विद्यालये | वृक्षयोः | उद्यानेषु |

(क) वयं ............... पठामः।

(ख) जनाः ............ भ्रमन्ति।

(ग) ............ नौकाः सन्ति।

(घ) ............ भ्रमराः गुञ्जन्ति।

(ङ) ............ फलानि पक्वानि सन्ति।



